## परिशिष्टम् ( टिप्पनी )

मनोभवेन विनाशितमदनेन बलिजितो विष्णो काय पुरा स्त्रीकृत । मोहिनीरूप दर्शनेच्छुना शिवेन प्रेरितो विष्णु पुनर्मोहिनीरूप दधार इति पौराणिकी कथा। [ अथवा अस्त्रीकृत इति छेद । त्रिपुरासुरवधकाले विष्णुर्यस्य बाणो बभूव इत्यपि पौराणिकी वार्ता ] यश्च उत्कर्षेण अवस्थितौ भुजङ्गरूपौ हारवलयौ यस्य यस्मिन् वा तथाभूत । यश्च शिरसि गङ्गाम् अधारयत्। यद्वा शरीरार्द्धेन गौरीं शिरसि गङ्गा च इत्यभिप्रायेण चकार। यस्य शिर शशिमत् चन्द्रयुक्त हर इति स्तुत्य नाम च अमरा आहु । अन्धकस्य असुरविशेषस्य विनाशकर ।—रामचरण तर्कवागीश ।

(ख) माधवपद्ये— सर्वदं सर्वाभीष्टदाता माधव त्वां पायात्। अभवेन अन्धारहितेन येन अन शकट ध्वस्त पादेन परावर्त्तितम्। बले असुरराजस्य जेता। काय पुरा अमृतपरिवेषणकाले स्त्रीकृत स्त्रीत्वं प्रापित । अमृताय विवदमानाना देवासुराणां अमृतपरिवेषणाय मायया नारायणेन मोहिनीरूप धृतमिति पौराणिकी कथा। यश्च उद्धतभुजङ्गहा—उद्धतस्य उद्धतस्वभावस्य भुजङ्गस्य अघासुरस्य हन्ता। यद्वा कालियस्य पीडाकर । आरवलय—अरिसम्बन्धि सैन्य यातीत्यय । यद्वा उद्धृतभुजङ्गहार बल यस्य तेन गरुडेन यातीत्यर्थं । अग गोवर्द्धन कृष्णरूपेण गां पृथ्वीञ्च कूर्मरूपेण योऽधारयत्। शशिन मथ्नातीति शशिमत् राहुस्तस्य शिरोहर' इति स्तुत्य नाम यस्य आमरा आहु । अन्धकानां यादवानां क्षयकर ( क्षयो निवास ) द्वारकाख्यनिवासनिर्माता। —रामचरण तर्कवागीश ।

(९०) (क) ( गौरीपद्ये ) विश्वम्भरे—हे जगद्धात्रि। भवशिवे—भवरूपे शिवे प्रथम—वस्तु अवस्थिते इति शेष । विद्योमत—विद्याकाशरूपब्रह्मवस्तुनोऽपि । प्रणिधानदृष्ट्या—इति शेष । योगिनस्तुतिपरा—योगिन स्तुतिपरा' इति पदच्छेद । प्रणिधाने योगावलम्बनदशायां या दृष्टिस्तया।

(ख) ( शिवपद्ये ) विश्वेश्वरेश—हे विश्वपते हे ईश। यद्वा विश्वम्भरस्य विष्णो' ईश उपास्य इत्यर्थ । प्रथम—अनादिमित्यर्थं ।

(९१) राधे क्षेम मति चन्द्रावली प्रति श्लेषेण कृष्णस्योक्ति । प्रियस्य—कृष्णस्य । क्षेम कस—प्रिय कृष्ण कंसेति सम्बोध्य चन्द्रावली प्रतिवक्ति क्षेममिति। दृष्ट—क्षेममिति शेष । राधा का—त्वयाऽपि यथा राधा दृष्टा तथा मयापि त्वं कथं दृष्ट ।

(९३) गोदुह—गोपाला । व्रीड—लज्जित ।

(९४) मे—इ मात । "म शिवश्चन्द्रमा वेधा मा लक्ष्मीः प्रकीर्तिता। मः च मातरि माने च बन्धने मू प्रकीर्तिता —एकाक्षरकोष ।

(९५) चषक—पानपात्रम् ।

(९६) माधव—भद्रमिति शेष, एव परत्रापि। घोराहिमर्द्दी—घोर भीषणं अहि कालियसर्पं मर्द्दाति पराजयते य स ।

(९७) मात—इति कार्त्तिकेयस्योक्ति । जीव—इति पार्वत्या उक्ति जीव प्राणिहि इति आशीर्वचनम् । प्रयच्छति—त्वं तात इति शेष । मे—मह्यम् । प्रहिते—प्ररिते । गुहे—कार्त्तिकेये । विघटयति—विश्लेषयति सति । सन्ध्याञ्जलि—सन्ध्योपासनार्थमञ्जलिपुटम् ।

(९८) लुठति—धावति । अग्रिम्—कार्त्तिकेय । विचेष्टित—विरुद्ध कर्म । चरित—आचरणम् । मिमीते—परिमाति ।

(९९) एषा भवता भूमि किं कथं याच्यते इति शेष । त्रैलोक्यमित्युत्तरम् ।

(१०१) केशव—विष्णु, पक्षे प्रशस्तकेश पुरुष । शौरि—शूरो नाम वसुदेव-पिता तस्यापत्यम् । चक्री—विष्णु, पक्षे कुम्भकार ।

(१०२) हरि—वानर इत्यर्थमादाय प्रत्युत्तरम् । कृष्ण—कृष्ण इति वानर विशेषण कल्पयित्वाह बिभेमीति । मधुसूदन—मधु पुष्परस सूदयति हरतीत्यर्थमादाय प्रत्युक्ति । व्रीड—लज्जित ।

(१०३) अमुना कुन्दकुड्मलेन—अमुना पुरोवर्त्तिना, पक्षे आलि मु मुकारो यस्य तत्र आदौ सुरक्षितेन मुकुन्दकुड्मलेन, केवलकुन्दकुड्मलेन इत्यर्थ । मुकुन्दकुड्मलेनैव मे प्रयोजन न तु कुन्दकुड्मलेनेति भाव ।

(१०४) धात हे लक्ष्मण । हिमचन्द्रमा—शीतलचन्द्र ।

(१०५) वत्स—हे लक्ष्मण । वैदेह्या—सीताया । मृग्यते—अन्विष्यत ।

(१०८) कुपिता—क्रोधान्विता, पक्षे पृथिवीपालकं । जगतां माता—जगत्प्रसविनी, पक्षे जगद्वासिनां धर्माधर्मकर्मणां परिमाता, फलदानकाले शुभाशुभकारी इत्यर्थ । अमका—असीमा, [पक्षे अममशील । शौरि—विष्णु ।

# परिशिष्टम् ( टिप्पनी )

(१०९) लोले—इति पार्वत्या उक्तिः । ब्रूहि कपालिकामिनि—इति लक्ष्म्या उक्तिः । लोले इति सम्बोधनं यथा चापल्यदोषं सूचयति तथा कपालिकामिनि इत्यपि भिक्षुकपत्नीत्वगर्हां गमयति । पाथसां जलानां पतिः समुद्रः । प्रत्येति—विश्वसिति ।

(११०) भिक्षार्थी सः—भिक्षुः स शिवः, पक्षे त्रिपादपरिमितभूमिभिक्षार्थी विष्णुः । ताण्डवं—उद्धतनृत्यम् । वृन्दावनान्ते—अन्तशब्दोऽत्र स्वरूपवाचकः । मृगशिशुः—मृगः करी करिवदनः गणेशः शिशुर्यस्य सः गणेशपिता इत्यर्थः ('मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः' इति मेदिनी), पक्षे पशुशावकः । जरठः वृषपतिः—जरठः वृद्धः सः श्वासौ वृषश्चेति तस्य पतिः, पक्षे जरठः वृषाणां पतिः । लीलासंलापः—लीलया विलासेन संलापः मिथोभाषणम् ।

(११२) पूर्वचरणत्रये सप्तमाक्षरविलोपात् योऽर्थः प्रतीयते स एव सीतायाः अभिमतः । अधिष्ठेति रावणसम्बोधनम् ।

(११३) हे गौरि मां प्रति वृथा कोपेन किम् कोपं मा कुरु इति शिवोक्तौ गौ इति सम्बोधनपदं इमाम् इति द्वितीयान्तपदं परिकल्प्य पार्वती प्राह ननु भो अहं गौरिति स्वीकरोमीति शेषः । कां प्रति कुप्यामि । अथ शिव उगौ 'इमाम्' इति पदद्वयस्य पार्वतीकृतविच्छेदमुपेक्षमाण आह 'मयि' मां प्रति कोपं इति अनुमानतः अनुमानेन अहं जानामि । पश्चात् पार्वती 'अनुमानतः' इति शिवोक्तपदस्य श्लेषेण अर्थान्तरं प्रतिपाद्याह सत्यमित्यादि—अनुमानतः इति तव वचनात् त्वं अनुमानतः—न उमा अनुमा उमाव्यतिरिक्ता नारी तस्यां नतस्तद्वशीभूत इत्यर्थः इति सत्यमेवेत्यर्थः । गिरिभव—पार्वत्या । कुटिला—श्लिष्टा ।

(११४) प्रिये—गौरि । क्रोधः न क्रियताम् इति शिवोक्तिः । गौरी तु शिववाक्यस्य नक्र कुम्भीर अधः क्रियतां त्यज्यताम् इत्यर्थमादायाह स नक्रस्तु भवन्मौलिस्थगङ्गोदरे । मुग्धे—प्रकृतार्थपरिज्ञानमूढे । मानसपूजितम्—मनःकल्पितमर्थं त्यज इति शिवोक्तिः । अथ गौरी मानसपूजितमिति पदस्य मानसं तदाख्यं सरोवरं पूजितं आहतं येनेति समासाश्रयेण हंसरूपमर्थं परिकल्प्य प्राह युष्मन्नियोगस्य कृतम् मदन्तिके नक्रो हंसश्च नास्त्येव तदुभयम् तव शिरोधारिण्यां

गङ्गायामेव। वक्रे—महावक्रस्य विपरीतार्थग्राहिणि। अमु—पूर्वोक्तम्। श्लेष—महावक्रस्य अर्थान्तरयोजनाम्। निराकुरु—परिहर इति शिवोक्तिः। गौरी च वक्रे इति सम्बोधनपदं सप्तम्यन्तत्वेन श्लेषमिति पदञ्च आलिङ्गनार्थकत्वेन कल्पयित्वा प्रत्युवाच वक्र—कुटिलस्त्वमिति शेषः मया कदा आश्लिष्टोऽसि आलिङ्गितोऽसि, नाहमिदानीं त्वामालिङ्गितवती तत् कथमालिङ्गनपरिहाराय मामेव ब्रवीषीत्यर्थः। वामाङ्गा—अर्द्धनारीश्वरमूर्त्तौ वामे वामभागे अङ्गं देहो यस्यास्तथा पार्व्वत्या। अन्यत् सुगमम्।

(११५) अनेन श्लोकेन शिवसमीपे नवोढायाः पार्वत्याः स्वेदादिसात्त्विकभावगोपनं वर्णितम्।

(११६) हरशिरसि गङ्गामवलोक्य पार्व्वती हरं पृच्छति हरस्तु गङ्गां गोपयन् पार्व्वतीमन्यथा प्रतिवक्ति एषा ते इत्यादि।

(११८) भूपे कूपसाधर्म्यं दर्शयति भूप इति। नमज्जनसुखावहः—कूपो हि मज्जनेन अवगाहनेन यत् सुखं तत् आवहति जनयति यस्मादृशो न। पक्षे नमतां नम्राणां जनानां सुखावहः सुखजनकः। कूपस्तावत् गुणसम्बन्धात् रज्जुसंयोगात् पात्रानुसारतः घटीघर्गरादिभेदानुसारेण यादृक् पात्रं तादृगित्यर्थः। नित्यं ददाति पय इति शेषः, पक्षे गुणसम्बन्धात् विद्यादिगुणवत्तया हेतुना पात्रानुसारतः योग्यायोग्यव्यक्तिभेदेन। अन्यत् सुगमम्।

(११९) श्लोकेऽस्मिन् चतुर्विंशत्यक्षरत्वात् वृत्तचन्द्रिकामते दुर्मिलाच्छन्दः, वाग्वल्लभमते तु द्विमिलाच्छन्दः।

(१२१) सर्वं ददासीतिमर्थ्वदः। हृषा—मिथ्या ब्रूयसे त्वमिति शेषः। सर्वंशब्दस्य सङ्कोचं दर्शयित्वा हृषात्वमुपपादयति नेति। अरय पृष्ठं पृष्ठदेशं तवेति शेषः न लेभिरे, त्वं कदापि रणभङ्गेन पलायमानः शत्रूणां स्वस्य पृष्ठं न दत्तवान् अतः पृष्ठदर्शनं न कारितवानसीत्यर्थः। अपिच परयोषितः परस्त्रियः नैव त्वदीयं वक्षः न लेभिरे इति शेषः। अतोऽभिलाषः पृष्ठं परस्त्रीभिश्च नैव त्वया कदाचिन्न लब्धम्। अत एतद्वयदानप्रदानं भवतः सर्वदातृत्वं व्याहन्ति। एनेन राज्ञोऽसाधारणं वीरत्वं जितेन्द्रियत्वञ्चेति व्याजस्तुतिरलङ्कारः।

(१२२) गी—सरस्वती, शास्त्रज्ञानमिति यावत्। रमा—लक्ष्मी, धनप्राचुर्य्यमित्यर्थ। ते—लक्ष्मीसरस्वत्यौ। विनयो नास्ति—तवेति शेष। सा—लक्ष्मीश। सा—गीश। स—विनयश, एते त्वयि सन्ति। अत साधारणधनिविद्वद्भ्यो विलक्षणोऽसीति भाव। धनवन्तो विद्यावन्तश्च प्रायश उद्धता दृश्यन्ते। त्वयि—अत तुकारोऽध्याहार्य्य।

(१२३) न जानाति—न ज्ञानवान् इत्यर्थ। न ददाति—न दाता इत्यर्थ। जगती जाया यस्य स, जायाया जानिरादेश। जगतीशब्दोऽत्र पृथिव्यर्थे प्रयुक्त। तेन—भूतलस्थापि भवत स्वर्गगतबृहस्पतिकल्पवृक्षापेक्षया गुणोत्कर्ष इति सूचितम्।

(१२४) ते जना कौपीनधना—कौपीनमात्रावलम्बिन, पक्षे कौ पृथिव्यां पीनधना प्रचुरविभवा। धात्रीफलम्—आमलकीफलम् अन्यभोज्याभावात्, पक्षे धात्र्या पृथिव्या फल भोगैश्वर्य्यादिकम्। न दन्तिवाजिनिवहा—हस्त्यश्वसमूहा न, पक्षे वाजिनिवहा अश्वसमूहा नदन्ति शब्दायन्ते। क्षिति—क्षय विनाश इति यावत्, पक्षे क्षितिभवि राज्यमित्यर्थ। निजकुल समल कलङ्कित क्षतम् पक्षे समलङ्कृत सम्यग् भूषित। परमेश्वरेण—सम्राजा।

(१२५) गुणयोगात्—ज्यासंयोगात् पक्षे शीलसौजन्यादिगुणसम्बन्धात्। सन्नत—अवनतकाय, पक्षे विनयनम्र इति धनुषा सह साम्येऽपि धनुर्वक्र त्वन्तु वक्रस्वभावो न। रुचिमत्त्वात्—कान्तिमत्त्वात्। विधु—कलङ्की त्वन्तु न तथा। गभीर—अतलस्पर्श, पक्षे गाम्भीर्य्यगुणयुक्त। अप्रतीत—अविश्वस्त जलधिर्हिंस्रजलचरसमाकुलत्वात् अविश्वस्त, त्वन्तु विश्वस्त धनुराद्युपमानानां गुणा एव त्वयि सन्ति न तु तेषां दोषा इति तेभ्य समुत्कर्षव्यापनाद् व्यतिरेकालङ्कार।

(१२६) हे उर्वीधर राजन् रम्यकाव्यकरणे त्वां सत्य निश्चित सत्यवतीभवे—सत्यवतीभिसत्यवती भूरुत्पत्तिस्थान यस्य स सत्यवतीभू द्वैपायनो व्यास स आचरे। सत्यवतीभि इति क्विजन्तनामधातोर्लट् ए। एव परत्रापि। सेनावने—सैन्यगहने यद्वा सैन्यरक्षणे। शरभवे—शरभ कार्त्तिकेय तम् आचरे, शरभि इति नामधातो पूर्ववद् रूपम्। भावने—संतापे। वागीशये वागीश बृहस्पतिम् आचरे। मार्गे—रचने विषये। व्याकरणे—दाक्षीकुक्षिभवे दाक्षी पाणिनिजननी तस्याविषये—विष्णुम् आचरे।

कुक्षि उदरं तस्माद् भूरुत्पत्तिर्यस्य स दार्वीकुक्षिभूः पाणिनिः तम् आचक्षे। रणे—युद्धे। पृथोदरभवे—पृथा कुन्ती तस्या उदरं भूरुत्पत्तिस्थानं यस्य स तम् अर्जुनम् आचक्षे। वितरणे—दाने। देवद्रुमे—देवद्रुः कल्पवृक्षः तम् आचक्षे सर्वेषां सर्वाभीष्टप्रदस्तम् इत्यर्थं। विश्वम्भराभूषणे—विश्वम्भरायाः पृथिव्याः भूषणे अलङ्करणे। मेरवे—मेरुः हेमाद्रिः तम् आचक्षे। सर्वत्र अहमिति शेषः। अन्ये जना यद्यद् गुणवत्तया जयति ते सह उपमीयन्ते, त्वं हि तत्सर्वोपमानभूतोऽसीति भावः।

(१२७) असौ—वारिधिः। स—मुनिः अगस्त्य इति शेषः। सद्—व्योम। पद्—चरणम्। साम्प्रतं पुरीधाम्नि जगन्नाथदेवस्य यन्मन्दिरं दृश्यते तस्य निर्माणं भवेनैव राज्ञा कारितमिति प्रसिद्धिः।

(१२८) मानम् मदीयमिति शेषः जले लवणवत् देव्याः लीनं तन्मयम् आसीत्। अतस्तत् प्रतिहर्तुं न शक्नोमि इति पराभवं प्रतिकर्तुं हरः महादेवः पक्षे हर नामकः पुरोहितः देव्याः मनोजिहीर्षया चित्तं हर्तुमिच्छया तन्मनोहरं तस्या देव्याः मनोहरं चित्ताकर्षकं किरीटं मुकुटं हरते चोरयति।

(१२०) हस्तन्यस्तकुशोदके—दानार्थं कुशवारि गृह्णति सति। भूः—पृथिवी। न कम्पते—यस्मै कथंचिद् दानं भङ्क्ष्येत्यर्थं। सर्वंसहा—यतः सा निखिलं क्षेयं सोढुं समर्था। देवागारतया—देवानां निवासस्थानतया। काञ्चनगिरिः—सुमेरुः। स स्मात दिग्भागाः इस्तिनां मध्ये येन तादृशस्य भित्तोर्भवने प्रस्थानेन या दृ स्या द्दृशेनाथस्थितिः तस्याः आशया शङ्कया।

(१३१) निरञ्जनम्—निष्कलम् उत्कृष्टमित्यर्थं, पक्षे अञ्जनयुक्तं पवित्रमित्यर्थं। सुदर्शनम्—उभय पक्षे सुदर्शनम्। सर्वव्यञ्जनरञ्जनम्—सर्वेषु अन्नभोजनस्य उपकरणेषु सुखदायकम्, पक्षे सर्वेषां सर्गादौ अव्यक्तानां पदार्थानां व्यञ्जनेन सगुणावस्थायां व्यक्तीकरणेन रञ्जनं लोकमनःप्रीभावजनकम्।

(१३२) कुञ्जघाटपत्ने—मुर्शिदाबादप्रदेशान्तर्गत कुञ्जघाटनामक ग्राम महाराज नन्दकुमारस्य जन्मभूमिरिति प्रसिद्धिः।

(१३३) द्वितीयशतभूमिका—अन्यवस्त्रा। अन्यादृशमन्दा—स्वल्पमिलिका। अत्र—भूर्णे। पार्थिवसम्बन्ध—भूमिसम्पर्कं, पक्षे पार्थिवः राजस्तत्र सम्बन्धः

क्षपाहष्टिरिति यावत् । यथा जलबहुलं स्वल्पचितिकं हि द्रव्यं अधिकतरचितिसंयोगं विना न कुत्राप्युपयुज्यते तद्वदियमपीति भावः ।

(१३४) अगस्त्यवंशसम्भूता —अगस्त्यकुलजाता ब्राह्मणा इत्यर्थः । वातापि —असुरविशेषः, पक्षे निम्बूविशेषः । नवकृष्ण —नूतनावतारी श्रीकृष्णः, पक्षे तन्नामको महाराजः । कमला—निम्बुविशेषः, पक्षे नवकृष्णमहाराजस्य सहधर्मिणी ।

(१३७) भिक्षाश्रय —भिक्षालब्धद्रव्यस्य पात्रम् ।

(१३८) त्वत्कीर्त्तिशीतकिरणे—तव यशोरूपचन्द्रे । रोहिणी—चन्द्रपत्नी । स्वपतीत्यादि—स्वस्याः पतिः तस्मिन् समये उभयोः सौन्दर्यादिना तुल्यत्वात् को मे पतिरिति सन्देहस्तेन जातशङ्का पातिव्रत्यभङ्गभयेन भीता सती । कज्जललाञ्छनेन—कृष्णवर्णाञ्जनचिह्नेन । प्रेयांस—प्रियतमं गगनचन्द्रम् । आङ्कयत्—अङ्कितमकरोत् । कलङ्क —कुकर्म्मजो दोषः ।

नवद्वीपेश्वर —नवद्वीपाधिपतिं महाराजं कृष्णचन्द्रम् ।

(१४०) आलीवर्द्दिनवाब—वङ्गविहारोत्कलानामधिपतिम् । नवकृष्णभूपतिम्—कलिकाताशोभाबाजाराधिपतिं महाराजं नवकृष्णम् ।

(१४१) मातृतात —मातामहः आलिवर्द्दिनवाब इत्यर्थः । अल्लामुख —अल्लेति परमदेवताया नाम मुखे यस्य सः । सुनसरमुलुक —सिराजद्दौलानवाबस्य नामान्तरम् ।

(१४२) मुक्तादिवर्णं —खण्डितायाम्बरं, श्लोकेऽस्मिन् शब्दपक्षे आद्यावरत्याग इत्यर्थः । वैकुण्ठाभिप्रणीत —(समासपक्षे) वैकुण्ठः विष्णुः अभिप्रणीतः आराधितो येन सः, (शब्दपक्षे )—कुण्ठा सङ्कोचः अभिप्रणीता सम्यग्रचिता येन सः । कोदण्डोदारनामा—( समासपक्षे ) कोदण्डेन धनुषा उदारं प्रशस्तं नाम यस्य सः, (शब्दपक्षे )—दण्डेन दण्डप्रायात् उदारं विख्यातं नाम यस्य सः, दण्डग्रहणम् अपयशोभागीत्यर्थः । अथ सुगमम् ।

(१४४) गन्धवाहाधिकविहितजवा—वायोरप्यधिकवेगशालिन ।

(१४५) छोऽस्त्र—मसीसद्म । तिग्मांशुकन्या—सूर्य्यतनया—यमुना इति यावत् ।

नूरदीन —शाहाङ्गीर-बादशाहस्य नामान्तरम् ।

(१४७) सम्भाविता—आदर कृता। दिल्लीवल्लभ—भारत साजाहान बादशाह। आसन—वासस्थान आग्रानगरीत्यर्थ। मधुपुरी—मथुरा।

(१४९) असौ दारा (दारासिक) साजाहान सम्राजो ज्येष्ठपुत्र।

(१५२) दुरूहद्रुते—दुरूहश्लोकाना द्रुतरचनायाम्।

(१६२) गुम्फ—ग्रन्थनम्। कुम्भी—हस्ती। पञ्चानन—सिंह। कविलिविधौ पञ्चसङ्ख्यकवदनविशिष्ट इत्यपि प्रतीयते।

(१६३) विसर—विस्तर प्रसार इति यावत्। उट्टङ्किता—उत्कीर्णा उल्लिखिता इत्यर्थं।

(१६४) रघुकारे—कालिदासे। दाक्षीपुत्रे—पाणिनौ।

(१६५) भा—दीप्ति पक्षे यश इत्यर्थ। रवे—रवेरिव (लुप्तोपमा)। माघस्य—माघकविविरचितशिशुपालवधकाव्यस्य, पक्षे माघमासस्य।

(१६६) 'दण्डिन पदलालित्यमि ति दाक्षिणात्यदेशीय पाठ।

(१६७) माघेन—तन्नामककाव्येन, पक्षे माघमासेन। पदक्रमे—सुप्तिङन्त पदविन्यासे, पक्षे चरणक्षेप। भारवे—तन्नामककवे (स्मरत इत्यस्य कर्मणि षष्ठी), पक्षे रवे सूर्यस्य भा किरणान।

(१६८) बाणभट्ट मयूरकवेर्जामातासीदिति प्रसिद्धि।

(१६९) असौ मुरारिकविरेव अनर्घराघवकार। अनकोऽस्य भट्टश्रीवर्द्धमानो जननी च तन्तुमती। 'भवभूतिमनादृत्य निर्वाणमतिना मया। मुरारिपदचिन्तायामिदमाधीयत मन'—कस्यचित।

(१७०) कान्यकुब्जमहाराजो यशोवर्मा प्रसिद्ध कविरासीत्। तस्य सभा वाक्पतिराजभवभूतिभ्यामेव समलङ्कृताऽऽसीत्।

(१७२) मौग्ध्यामधुरम्—अतीव मनोहरम्।

(१७७) गाम्—पृथिवीं भूमिमित्यर्थं। शाङ्गारप्रकरा—प्रज्वलिताङ्गारपुञ्जाम्। अमर्षम्—असहमान। रिङ्गत्—चलत्।

(१७८) अकिञ्चिद—निष्पाप, गङ्गाजलसङ्गमाद निर्दोष इति यावत्। प्रियतमस्य दोषदृष्टि प्रायशो न भवतीति विशिष्टप्रणयप्रकृति। मुक्ति—मोक्ष, पक्षे मोचन विरेचनमित्यर्थं।

(१७९) विलोचनहारि—नेत्रद्रतिकरम्। आरटित—शब्द। करभ—उष्ट्र।

(१८०) माकन्दम्—आम्रम्। मकरन्दतुन्दिल—प्रचरमधुयुतम्। कर्णारुन्तुद—श्रुतिकटु। शङ्केत—मन्येत।

(१८२) परभृत—कोकिल। गोष्ठी—सभा।

(१८३) भिल्लार्भका—भिल्ला म्लेच्छजातिविशेषास्तेषामर्भका बालका।

(१८४) अरविन्दवनैकबन्धु—पद्मसमूहसुहृत्। चक्रा—चक्रवाक।

(१८८) प्रियतनयतया—तनयवात्सल्येन। दत्तहुङ्कारमुद्रा—दत्तहुङ्कारसङ्केता। धेनु—सवत्सा पयस्विनी गौ। मूर्द्धा—मस्तकेन। आहतमाहता—पुन पुन पीड़िता। अनु—पश्चात्। प्रस्नुत—क्षरितदुग्धम्। ऊध—स्तनम। किंचिदितादि—किंचित् ईषत् कुञ्च वक्रम एक जानु यस्य तादृशस्य। अनवरतेतमादि—तया अनवरत चलत् अस्थिर चारु सुन्दर पुच्छ यस्या तयोक्तया। विच्योतनदीरेति—विच्योतन्ती च्यन्ती या चीरधारा तस्या लवेन लेशेन शवल नानावर्ण मुख यस्या तथाभूतस्य। तर्णकस्य—वत्सस्य। उत्कर्णौ—उद्गतौ कर्णौ यस्य तम्। आतृप्ति—तृप्तिपर्यन्त वत्सस्येति शेष। लेढि—स्वदते।

(१९१) परिमलबहुली—सुगन्धपूरिते।

(१९२) दानाञ्चितलोचन—दानेन मदवर्षणेन वितरणेन वा अञ्चिते विलोचने यस्या स।

(१९४) असौ परमविदुषी जयन्तीदेवी फरिदपुरजेलान्तर्गतकोटालिपाड़ानिवासिन प्रसिद्धनैयायिकस्य गोकुलसार्वभौमस्य भार्यासीत्। तौ उभौ मिलित्वा "आनन्दलतिका" नामक ग्रन्थमेक रचयामासतु। आनन्दलतिकायाम् येनाकारि स्त्रिया सह' इतीव वचन ग्रन्थशेषे-प्राप्तम्।

(१९६) वेल्लति नृत्यतीत्यर्थ। हरिद्वनावलौ—दिग्वने।

(१९७) कीटस्थ—शङ्खो हि कीटविशेषस्यावास। अन्त—मध्ये। आराद्भव—अवकरजलसमुद्भूत। एतैनास्य जन्म च निन्दितमिति सूचितम्। शून्य—अन्त शून्य असार इति यावत्। इत्य बहुदोषदूषितोऽपि शङ्ख केन गुणेन श्रीपतिनिकटे विष्णुसन्निधौ स्थितिं लेभे इति साक्षेप प्रश्न। कश्चित् गुणहीनोऽपि कस्यचित् गुणिन प्रीतिपात्र भवतीति भाव।

(१९८) कूजितमञ्जुलशालके—विहगध्वनिविशिष्टशैवालसमूहे।

(२००) आत्मत्वत्याग—एतेन महती त्यागशीलता दर्शिता, निर्यत्नोपनते—अनायासलब्धे। वृत्ति—जीविका। एकत्र—एकस्मिन् पक्षे। चर्या—आचरणम्। अनृजुवर्त्मता—वक्रगति, पक्षे कपटव्यवहार। वक्त्रे द्विरसना—मुखे जिह्वाद्वय। पक्षे वाक्यनिष्ठाभाव। वीक्षण—दृष्टि, पक्षे विषवद्दृष्टि। भोगिन्—सर्प, पक्षे भोगासक्त।

(२०२) सित—शुभ्रम्। कज्जलाभ—कृष्णवर्णम्। चीयते—वर्द्धते। अपचीयते—मन्दीभवति। उभयत्र कर्मकर्त्तरि प्रयोग।

(२०४) गिरिकुहरे—पर्वतगुहायाम्।

(२०७) त्रपाश्यामा—त्रपया लज्जया श्यामवर्णा। पनसम्—कण्टकिफलम्। लाङ्गलिफलम्—नारिकेलम्।

(२०८) पथिक—पथिकस्य। कदलीमूलरसेन पथिकदशनजनितज्वाला निवार्य्यते।

(२०९) करटालय—काकवसति। भूतनिकेतन—देवयोनिविशेषवासस्थानम्।

(२१०) सम्भूति—जन्म। परिमल—सुगन्ध। गीर्वाणचेतोहर—देवानां मनोमोहन। दातृगुणोत्कर—दानकर्त्तृगुणसमूह। अर्थीत्यादि—अर्थिप्रवराणां याचकश्रेष्ठानां या अर्थिता तस्या अर्पणविधौ दानविषये। विवेक—ज्ञानम्।

(२११) प्रेङ्खत्—चलत्। श्रीखण्ड—चन्दन।

(२१२) अलिना—भ्रमरेण। उरीकरोषि—अवलम्बसे, प्राप्नोषीति यावत्। कुशेशयदृशा—कुशेशय पद्मम् तद्वत् दृशो यासां तासां, कमललोचनानां रमणीनामित्यर्थ।

(२१४) गदराशिनाशनिपुण—रोगसमूहविनाशदक्षम्।

(२१५) स्व मूल—स्वीय मूलदेशम्। नोपयोगमगमत्—आनुकूल्य न चकार।

(२१६) उलूपविटपी—'उलुखड' इति भाषा।

(२१७) उन्मत्त—रे धुस्तूर। पिनाकपतिना—महादेवेन। चन्द्रोपल—चन्द्रकान्तमणि। वार्द्धि—समुद्र।

(२४२) प्राची—पूर्व्वदिक् । पिङ्गा—पिङ्गलवर्णा । रसपति—पारद । ग्राम्यसदसि—ग्राम्यजनसभायाम् । द्रविणरहितानां—निर्धनानाम् ।

(२४३) घूकालीं—पेचकसमूहम् । लोकालि—जनसमूहम् ।

(२४४) (क) हृता अन्येनापहृता नववध्वो येषां तादृशानां पुरुषाणाम् भयम् अम्भोधिनिमज्जनरूप यथा । करै—किरणै, पक्षे हस्तै ।

(ख) अयान्—रामादीन् । व्यामर्षात्—क्रोधात् । खनगतघनोर्म्मिम्—मन्दितोत्तालतरङ्गम । करै—किरणै, पक्षे हस्तै ।

(२४५) उलूका—पेचका । चिरात्—( अव्ययम् ) दीर्घकाल व्याप्येत्यर्थः । निद्रामुद्रां—निद्राचिह्नम्, निद्रया नेत्रनिमीलन वा ।

(२४८) नव—नयोर्मध्ये । क्रकचनिकरै—अङ्गभेदकास्त्रविशेषे ।

(२४९) गुञ्जया सह—गुञ्जा—कुँच' इति भाषा । तोलयन्ति—ऊर्ध्वपरिमाणेन समीकुर्व्वन्ति । श्लोकेऽस्य भुजङ्गप्रयातच्छन्द ।

(२५०) (क) सच्छिद्र—छिद्र रन्ध्र, पक्षे दोष । वक्र—कुटिल ।

(ख) अलिकुलैः कमलमिव कज्जलैरधिकमल रञ्जितमित्यर्थः ।

(ग) विधिना इदमेवादिष्ट, हे खण त्व कर्णगत भव श्रुतिमाले तिष्ठ, कामिनीकाञ्चनयोस्तत्त्वज्ञानपरिपन्थित्वाद् व्यवहारसंसर्गं मा कुरु । तु किन्तु तदर्थे विधातृवाक्यार्थम् अजानद्भिः मोहमयैर्मदैरित्यर्थः । तेन—स्वर्णेन ।

(२५१) दावविधुराणि—दावानलदग्धानि । रिक्त—शून्य जलरहित इत्यर्थः ।

(२५२) रसा—पृथ्वी । पूषकरोत्करै—पूषा सूर्यस्य कराणाम् उत्करै समूहै । एकान्तेन—सङ्गतेन । अन्तरागतम्—अवसरप्राप्तम् । स्वान्तेन—चेतसा । अभित—सम्मुखे ।

(२५३) असमञ्जसम्—अयोग्यम् । मण्डूक—भेक ।

(२५४) विवस्वान्—सूर्य्य । मीनमेषवृषाणां क्रमपाठात् भोगवासनाया उत्तरोत्तर प्राबल्य सूचितमिति ।

(२५६) खलानां—सदसद्विवेकविधुराणाम् । अस्तामद—अस्ता नष्टा मायदा यस्मिन् तद् यथा तथा । जठरपिठरीपूर्त्यै—उदररूपस्थालीपूरणाय । गोपवेशस्य विष्णो—श्रीकृष्णस्य । गुणगणनया—गुणकीर्त्तनरूपस्तोत्ररचनया प्रायश्चित्त कुर्य्याम् ।

(२६०) कुम्भकर्णायते—कुम्भकर्णवत् दीर्घनिद्रां याति। सन्देशे—संवादवहने।
वस्तुनिरीक्षणे—द्रव्यदर्शने। मृषाजल्पेषु—मिथ्याकथनेषु। कौल—
(२६१) स्तेयव्रते—चौरकर्मणि।
शूकर।
(२६२) वातपित्तकफादयो धातव उच्यन्ते। वैद्यकनये—वैद्यशास्त्रे। तरल
यन्त—व्याकुलीकुर्व्वन्त।
(२६३) सागरस्य रावणसन्निहितत्वादिति।
(२६५) अन्वेषयता—अन्वेषणम् अन्वेषस्त कुर्व्वता। तत्करोति तदाचष्टे इति
णिच् तत शतृप्रत्यय।
(२६६) दृढतरं निबद्धा मुष्टिर्येन पक्षे यस्मिन् तस्य। एकत्र दृढमुष्टिबन्धन
धन रक्षत अन्यत्र धारणकाले। कोषे धनागारे निक्षिप्तस्य अपहरणादिभयात् सदैव
दत्तदृष्टे, पक्षे कोषे आवरणे स्थितस्य। सहजमलिनस्य—नीचस्वभावस्य, पक्षे
स्वभावत कृष्णवर्णस्य। आकारत—आकृत्या आकारेण वर्णेन च।
(२६८) वधूटी—बाला वधू। अनु—सह।
(२६९) अनवद्येति पद परत्र यथासम्भवं लिङ्गव्यत्ययेनान्वेतव्यम्।
(२७१) वेदादीनां पद्ममादित्यादीनाम् असत्त्वेऽपि तत्कथनात् तेषां तद्वत्
कार्य्यकारित्वमिति बोध्यम्। प्रसिद्धानि नीलकच्छपकादीनि पद्म, धन्वन्तरिचम्पकादीनि
च नव इति चतुर्दशरत्नानि।
(२७२) तत्र—पूर्णचन्द्रे। कमलालये—रत्नेन विषदृष्टिवेतु सूचित।
(२७४) अर्भकम्—शिशुम्। कर्पटम्—वस्त्रम्।
(२७५) स्थूणा—गृहस्तम्भ 'खुँटि' इति भाषा। अभ्यर्णजनागम'—अभ्यर्ण
आसन्न जनागम यस्मिन् तादृश काल।
(२७६) मयि जीवति सति मामग—अथ पुरुषान्तर गच्छन्ति यान्ताद्दृश्यो न।
यद्यपि क्षुधा तृष्णा च कदाचिन्मां मुञ्चति आशा तु न क्षणमपि।
(२७८) सगृहा—स सम्यक् गृहो ग्रहण यस्या सा, यथाविधि परिणीता
अभूदिति शेष।

(२८१) जनस्थान—दण्डकारण्यमध्यपाती भूखण्डविशेष , पक्षे लोकालय । *कनकमृगीरिति*—*कनकमय मायामृग तद्विषयिणी तृष्णा लिप्सा तदन्वितधिया*, पक्षे कनकमिव स्वगतृष्णा मरीचिका तदनुगतबुद्धिना। अयि वैदेहि। इति वच । प्रतिपदम्—पदे पदे। उदश्रु—सजलनयन यथा तथा। प्रलपित—वृथा कथित, पक्षे वै इति पादपूरण। देहि इति वच, अन्यत् सुगमम्। लङ्काभर्तु—रावणस्य वदनानां या परिपाटी अनुक्रमस्तस्यां दृषरचना वाणवर्षेण कृता, पक्षे ईषत् भर्त्ता कामर्त्ता निकृष्टस्वामी तस्य समीपे वदनपरिपाटीषु गुणकथनप्रकृष्टासु रचना अलम् अत्यर्थं कृता। कुशलवसुता—सीता कुशलवौ सुतौ यस्याः सा, पक्षे कुशलानि पटूनि सौभाग्यौत्पत्तयं वसूनि धनानि यस्य तस्य भावस्तत्ता। अधिमता—प्राप्ता।

(२८३) विगतकलह—सति द्वितीये आभरणे कलह सम्भवेत् अत्र तु तदभावात् कलहाभाव इति भाव ।

(२८४) शातयति—पातयति। क्षपयति—नाशयति।

(२८५) वाल्ग्रासा—जघन्यधान्यविशेषा ( 'वैलेङ्गा' इति भाषा )। कुपिठर-जठर—कुत्सितपाकस्थालीरूपजठर। गण्डूपदाना—किञ्चलुकानाम्। कर्पटे—वस्त्रे।

(२८७) सकल—सर्वं पैतृकं धनम्। लयं—नाशम्। ८—दारिद्र्य सहोदरम्। मत्—मम।

(२८८) मानसुता—मानस्य सुता मम आद्यवनिता प्रथमा स्त्री। अपरा वनिता भिन्ना दैन्यस्य कन्या। तातैश्वर्यविगर्विता—तातस्य दैन्यस्य ऐश्वर्येण प्रभुत्वेन विशेषेण गर्विता। एतेन दैन्यस्य प्राबल्य सूचितम्।

(२९०) कृता—दैन्यदस्युभिरिति शेष।

(२९६) मत्सरजुषा—खलानाम्। दर्पं—दुर्बुद्धि। कासारे—सरसि।

(२९७) अर्थिजनोपघातम्—याचकजनानां विघ्नम्।

(२९८) आवलम्य—माला। विरूपाक्षता—विकटलोचनत्व विसृङ्खलत्वमिति यावत्, पक्षे शिवत्वम्। सङ्गे—संसर्गे समीपागमने इति यावत्। विरोचनत्व दैत्यत्वम्, पक्षे सूर्यत्वम्। शशिहासकृति—शशाकारसिद्धत्व, पक्षे चन्द्रत्वम्। वक्रतुण्डरचन—वक्रेण वक्रभावापन्नेन तुण्डेन मुखेन रचन वाक्यविन्यास, पक्षे गणेश

शशिना कृत तुच्छस्य मुखस्य रचन निर्माण तद्रूप गणपतिभावम्। अपर्णास्मता—पर्णस्यापि अभावशालिदरिद्रस्वरूपताम् पक्षे अपर्णा दुर्गा तत्स्वरूपता शक्तिरूपमिति यावत्।

(२००) शेष—अनन्तनागी। भवभराक्रान्ते—ब्रह्माण्डभारनिपीडिते। श्रिया—लक्ष्म्या। लक्ष्मीवन्त—लक्ष्मीविशिष्टा धनिन इत्यर्थं।

(२०१) सरसिरुहरुचां—कमलकान्तीनाम्। अन्तरङ्गै—आत्मीयै तरुणस्य-कान्तिविशिष्टैरित्यर्थं।

(२०२) करीरद्रुमे—वंशाङ्कुरे कण्टकिवृक्षविशेषे वा। खर—गर्दभ अश्वतरो वा।

(२०३) सखि—युद्ध। हेलाम्—अवहेलाम्। गरुत्मन्त—गरुडम्। मदन-भतां—सुखविशिष्टानां जनानाम्।

(२०४) द्वयादिगुणान्वित—द्विविचतुरादिभिर्विषयैरन्वित पक्षे द्विविचतुरादिभिरङ्कैर्गुणित। लाकृति—लृकारस्य आकृतिरिव आकृतिर्यस्या सा नवमसंख्यात्यर्थ। द्वयादिसंख्यया नवमसंख्याया गुणे कृते यो राशिर्भवति तस्य योगफलेनापि पुनर्नवमसंख्यैव जायते। यथा २×९=१८ १+८=९। एवमादिभिर्गुणितोऽपि।

(२०८) सप्रस्वेद—घर्मार्त्तं। पुलकपरुष—रोमाञ्चान्वित। सधर्मो—समगुणशील आत्मन। सप्रकम्प—कम्पयुक्त। सान्तर्दाह—दरिद्र अप्रचिन्तया ज्वरी च ज्वरप्रकोपाद अन्तर्दाहविशिष्ट। प्रशिथिलधृति—च्युतधैर्य उभयोरपि विचारबुद्धेरभावात्। सास्यशोष—चिन्तया ज्वरप्रकोपेण च शुष्कमुखमध्य। प्रधन—युद्धम्।

(२१२) गजघटासघट्ट सघरम्—मदमत्तगजसङ्घर्षदारुणम्। सर्पन्ति—गच्छन्ति।

(२१४) खेन समुत्कटेन—स्वरचितेन उत्कटश्लोकेन।

(२१५) न्यक्काराय—धिक्काराय पार्थिव कथयिति शेष। एवं परत्र। पाप हि अस्थानोपन्यासजनितमिति बोध्यम्।

(२१६) हारै—स्रग्भि। साडम्बरै—वैचित्र्यबाहुल्ययुक्ते। अम्बरे—वस्त्रे। रुक्मीडितो य पाञ्चालतकर पुरुषस्तु तस्य स्पन्देन दरता अमृतेन उपमा दीयते।

(२१७) तर्कु—'टेको' इति भाषा। स्वपोषणार्थं कृतश्रमो जन सिद्धि लभते इति भाव ।

(२१८) विद्यावदात—विद्यया अवदात शुभ्र निर्मलमित्यर्थं । विश्वपकष्ट हारिणि—भुवनदु खविमोचके ।

(२२०) श्राव्यताम्—गुरुणा पाठ्यताम्। कृतफलम्—सफलम्। ग्रहम्—ग्रहणम अर्थबोधमिति यावत्।

(२२३) दिविषद—देवा । दूर विहाय—दूरवर्त्ति आकाश स्वर्गमित्यर्थ । अर्थिसार्थात्—याचकगणात्।

(२२५) निगमा—शास्त्राणि। दाम्पत्यसाम्ये गृहाश्रम प्रशस्त, तद्वैषम्ये त निन्दा इति भाव ।

(२२७) श्रीद कुबेर तस्य मित्रम्। लक्ष्मीकुबेरहिरण्यानां यथाक्रमसम्बन्धात् गोविन्दादीना सम्बन्ध इत्यर्थ ।

(२३०) पृथुपथे—सुविस्तृतपथे सर्गगमनपथे इत्यर्थ । ससारेति—ससाररूप पृथ विस्तृत भीषणमित्यर्थ मरुस्थल तस्मिन्। सुरतरु—कल्पवृक्ष ।

(२३२) गुणवता गुणानाम् उपादाता गृहीता यावन्न भवति तावत् त्रिभुवन-महार्घा त्रिषु भुवनेषु महामूल्या अपि गुणवतां गुणा असत्कल्पा मन्दाभिप्राया भवन्तीति शेष । अत्र दृष्टान्तमाह—दैत्यारिविणो हृदयवसते हृदि धारणात् प्राक् अपि स प्रसिद्ध कौस्तुभमणि अम्भौ समुद्रे किं नासीत् अपि त्वासीदेव। क्वचित् कुत्रापि अस्य मणे श्रुति श्रवणमपि अभूत् उपादातुरभावाम्नाभूदेव इत्यर्थ । गुणपरिचयेन गुणवत्ता माहात्म्यम् आश्रयमूलमेवेति भाव ।

(२३३) रत्नाकर—समुद्र स्वरत्ने किं कुरुते आत्मन कि हित साधयति न किमपीत्यर्थं । एव सर्वत्र। श्रीखण्डखण्डे—चन्दनकाष्ठे । विभूति—सम्पत्।

(२३४) मन्दाध्वक्रमराजहंसनिचय—अध्वनि पथि क्रम पादविक्षेप अध्व क्रम । मन्द अध्वक्रमो यस्य स चासौ राजहंसनिचयश्चेति।

(२३५) व्यलीकानि—अपराधान्। दग्धमन्दिरसारे—( वह्निविशेषणमेतत् ) —मन्दिरसार श्रेष्ठगृह येन तादृगपराधकारिण्यपि।

(२३६) सद्भव —तस्मात् कुम्भात् उद्भवो यस्य स अगस्त्य इत्यर्थ ।

(२३९) परे —अन्ये स्तुतिपाठकै , पक्षे द्विलिपंक्त्यादिभिरङ्कै । वर्द्धिता-
नामपि—उत्कर्षं गमितानामपि, पक्षे गुणितानामपि। लाकृति —लृकारस्य
आकृतिरिव आकृतिर्यस्या सा नवमसंख्येत्यर्थ । द्व्यादिसंख्यया नवमसंख्याया गुणे
कृते यो राशिर्भवति तस्य सङ्कलनेनापि पुनर्नवमसंख्यैव जायते। यथा २×९=१८,
१+८=९। एव त्र्यादिभिर्गुणेऽपि।

(२४०) मौखर्य—वाचालता। मौन—तूष्णीभाव ।

(२४१) विहगखल —विहगेषु खल । 'पक्षिधूर्तश्च वायस' इत्यक्ते ।
अतिपल—प्रतिक्षणम् । विलोल —चञ्चल । काकोल —द्रोणकाक ( डोंडकाक
इति प्रसिद्ध )। कीर—हे शुक। तृतीय नेत्र—विद्याया

(२४२) कामन्धा धनु —अभीष्टदायिनी गवी ।
सूक्ष्मदर्शनसाधनत्वात्। सत्कारायतन—समादरभूमि । गुण

(२४४) सद्वंशजातम्—उत्कृष्टवेणुरचित पक्षे सत्कुलसम्भूतस्य।
कोटिनस—गुणेन मौर्व्या कोट्यो कोटिद्वये नम्र पक्षे बहुगुणैरवनतस्वभावम्।
अमुत्र—दक्षिणे। सत्पक्षयोगात्—सद्भ्यां वर्तमानाभ्यां पक्षाभ्यां पार्श्वद्वयनिहिताभ्या
पक्षिपक्षाभ्या सह योगात् पक्षे सता साधुना पक्षेण सहायेन सह सम्बन्धात्।
उक्तञ्च कीटोऽपि सुमन सङ्गादारोहति सतां शिर ' इति।

(२४५) सपक्ष —पक्षाभ्या सह वर्तमान पक्षे सहाययुक्त । स हि
पक्षहीन —हि यत स सिद्ध पक्षहीन पक्षशून्य असहाय इत्यर्थ ।

(२४६) धीर—सुविचारपुर सर पक्षे मन्द मन्दम्। पदम्—सुप्तिङन्तादि
पदम् , पक्षे चरणम्। शब्द समुदीयते—शब्दोऽयं शुद्ध अशुद्धो वा इति
विचारयति, पक्षे सुस्त क शब्दो जायते इति शृणोति। नानार्थोद्धरणम्—श्लिष्ट
पदप्रयोगेण विविधार्थसंग्रहम् , पक्षे स्वर्णरौप्याद्यपहरणम्। अलङ्कारम्—उपमादि
विविधालङ्कारम्, पक्षे कङ्कणादिभूषणम्। सुवर्णनिचयम् ।—सुश्राव्यवर्णसमूहम् ,
पक्षे स्वर्णसमूहम्। रसान्तर्गतम्—शृङ्गारादिरसमिश्र वाक्यम् , , पक्षे रसाया'
पृथिव्या अन्तर्गतम्—अभ्यन्तरस्य सुस्थापित धनम्। दोषान्वेषणतत्पर —दोषाणां

दुःश्रवत्वादीनां काव्यस्येति शेष अन्वेषणे तत्परः मनोयोगी, पक्षे दोषा रात्रिः तस्या अन्वेषणे तत्परः।

(३४८) कविताकान्ता स्वयंवरेति शेष । व्याकरणञ्च पितरं नैव एति कविताया व्याकरणज्ञानजन्यत्वात् तस्य तस्याः पितृत्वम्। छान्दसात्—वेदाध्यायिनो जनात्।

(३४९) वचो भणि—चीरकम्। करटारवा—करटानां काकानां आरवाः शब्दाः।

(३५०) चन्दनशब्दस्य क्लीवत्वे चन्दनकाष्ठार्थप्रतीति ।

(३५१) कुम्भसम्भवः—कुम्भजातोऽगस्त्यमुनि ।

(३५२) पात्रम्—दीपाधारम् पक्षे परिवारवर्गम्। मल—पाप, पक्षे मुगमम्। स्नेह—तैल, पक्षे सुगमम्। गुणान्—दीपवर्त्तिकाः पक्ष विनयादीन्। *चिणोति—नाशयति। द्रव्यावसानसमये—तैलाद्यभावे पक्षे खाद्यपरिधेयाद्यभावे।* कुलसद्मनि—वंशरूपगृहे। कोऽपि—अनिर्वचनीय साधारणदीपादितर इत्यर्थ ।

(३५३) भास्वति—सूर्ये। शनैश्चर—सूर्यसुत । विधौ—अस्त गते इति शेष । बुध—सौम्य ।

(३५४) अवशभवाः—वेणुभिन्नवस्तुनिर्मिता पक्षे नीचकुलोत्पन्ना । गुणेष मौर्व्यां नैपुण्यादिगुणेषु च प्रयुक्ता प्रेरिता सन्त परमर्मभेदिन परेषां मर्मस्थान विदारका भवन्ति। ये च विशुद्धवंशजा उत्कृष्टवेणुनिर्मिता उत्कृष्टकुलोत्पन्नाश्च ते तथाविधा गुणप्रयुक्ताः चापा इव नमता व्रजन्ति। वंशस्य गुणदोषा हि पुंसां सदसत्प्रवृत्ति जनयन्तीति भाव ।

(३५६) चुलुकीकरोति—गण्डूषीकरोति नाशयतीत्यर्थ । किञ्च—अन्यच्च।

(३५७) पूर्वार्द्धेन बकस्य गुणाधिक्य दर्शयति। उभौ पक्षौ शुक्लौ शुभ्रौ बकस्येति यावत्, परं चन्द्रस्य एकपक्ष एव शुक्लः। वियति—आकाशे। अव्याहतगतिः—बक इति शेषः, चन्द्रस्तु केवलाकाशे। बक सदा मीनं भुङ्क्ते खादति, चन्द्रस्तु मासमेकं मीनराशिं भजते। बक सकलस्थाणुशिरसि समस्त शाखापत्ररहितवृक्षोपरि वसति, चन्द्रस्तु एकस्य स्थाणो शिवस्य शिरसि वसति,

कश्चित् एभ्य पृथक् कोऽपि अधिक गुण चन्द्रेऽस्तीति शेष । स च स्थानइ गुणा इति । स्थाने योग्याधिकरणे मान्या पूज्या , स्थानरहिता अयोग्यस्थाने निहितायत् नहि न तादृक् मान्या भवन्तीति फलितार्थं । स्थानोत्कर्षेणैव गुणानामुत्कर्षं इति भाव ।

(२५८) यस्य स्थलीति—हरेर्यस्य स्थली विधेर्वदन हरस्य वामशरीरमान तं । पुरुषाकृतय —हरिविधिहरा ।

(२५९) समुद्र प्रति रावणस्य तिरस्कारोक्तिरियम् । रावणेन दयमभिमुखे अमुधिशब्दादय उच्चारिता ।

(२६१) वागुरिक—व्याध । सीदन्ति—ट खमनुभवन्ति । ग्रथ्यकवलयद्गणा- नभिज्ञा नवकोमलतृणान्यपि भक्षयितुमक्षमा ।

(२६७) कौरवपाण्डववार्योयान् सम्बोध्य ट शासन प्रति भीमस्य क्रोधोक्तिरियम् । व —युष्माकम् । तम्—ट शासनम् ।

(२६८) अन्यस्मिने—श्रुत विद्या ।

(२७०) बोढा—वहनशील । धनपतिसखम्—कुबेरमिव शिवमित्यर्थ

(२७३) (क) वाजिमखस्य—अश्वमेधयज्ञस्य ।

(ख) धन् एश्वर्यप्रसवयोरित्यदादिगणीयस्य सु धातो रूपम् । प्रसौति विजय धर्म इति हलायुध ।

(२७४) तमात —तस्या सुक्षे तात पिता । दौत—दूतकर्म्म विवाहकार्य्ये घटकत्वमिति यावत् । मक्षे—ह भक्षे । मरिदशनविधौ—कौतुकच्छलेन ।

(२७५) स्वःसिन्धुतीरे—स्वर्गगङ्गातटे मन्दाकिनीतीरे इत्यर्थ । अघविघात वीरे—अघानां पापानां विघाते विनाशविषये वीरे वीरसदृशे । चीर—अजिने । अधीरे—नश्वरे ।

(२७६) हर—शिव । हर—नाशय । ह—सम्बोधने । 'ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे' इत्यादि मेदिनी । गङ्गेत्यादि—हे गङ्गाधर मे पदाले मे पादपूरणे च विनियद्दे इत्यादि मेदिनी । चेतस धराभाव धारकत्वं धर पवनस्त्वस्य सक्नोयं पादपद्मे मदीय चित्त स्थापय इत्यर्थ । भवेत्यादि—हे भव भव एव सिन्धु तस्मिन् भवसिन्धौ संसारसागरे मे कर्णधार

नाविकः भव, मां संसारसागरस्य पारं नय इत्यर्थः । अपिच भव सिन्धुरिव तस्मिन् भवसिन्धौ सिन्धुवत् महाविपत्सङ्कुले संसारे मे कर्णधारः भव अतिमूढत्वात् असत्पथ प्रवृत्तस्य मम कर्णे धृत्वा सत्पथप्रवर्त्तको भव इत्यर्थः । किञ्च भवसिन्धौ सर्वसङ्कुला न्यदि अव काशीचैत्रे मे कर्णधारो भव, मरणसमये तारकमन्त्रं दातुं मम कर्णे धारय, "यत्र काश्यां श्वलेऽपि जन्तुर्नांशुचिता व्रजेत् । अतस्तत्कर्णसंस्पर्शं करोम्यहमपि स्वयम्" इति प्रतिज्ञातवान् ~ यथा मे काशीमृत्युर्भवेत् तथा करुणा कुरु इति भावः । "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनो" इति मेदिनी । मृत्युमित्यादि—हे मृत्युञ्जय त्वं जय सर्वोत्कर्षेण वर्त्तस्व देवतान्तराणि परित्यज्य केवलं त्वामेवाहं प्रणमामीत्यर्थः । जय शम्भो इति वाक् सदा मदास्ये मदीयवदने स्तात् अस्तु ।

(२७७) (क) समाप्य—उपभुज्य । विषयान्—भोग्यवस्तूनि । कल्लोल—तरङ्गः ।

(२७९) (क) ( रसुम्=९ , गुभांशु =१ रूपम्=१ नक्षत्रनायकः =१ ) अतएव ९१११ अङ्कस्य वामगत्या १११९ शकाब्दाः (६०४ वङ्गाब्दा , ११९७ खृष्टाब्दा वा ) उद्दवन्ति ।

(ख) ९१११ अङ्कस्य वामगत्या १११९ शकाब्दा उद्भवन्ति ।

(२८०) (क) बाण =५ , व्याहृति =७ , राग =६ , इन्दु =१ । अतएव अङ्कस्य वामगत्या १६७५ शकाब्दा (११६० वङ्गाब्दाः, १७५३ खृष्टाब्दा वा) उद्भवन्ति ।

(ख) धरेति—भूदेवराजस्य वारेन्द्रवंशीयस्य गौडप्रदेशाधिपस्य रामकान्तनृपस्य । भाविनी—सहधर्मिणी । श्रीभवानी—श्रीमती राज्ञी भवानी ।

(२८१) खम्=० , गगनम्=० , शिवम्=१० । अतएव अङ्कस्य वामगत्या १००० शकाब्दा ( ११८५ वङ्गाब्दाः, १७७८ खृष्टाब्दा वा ) उद्भवन्ति ।

(२८२) गङ्गावासे—नवद्वीपादूरपूर्वदेशवर्त्तिनि प्राक्तनगङ्गातीरस्थायिनि ग्राम विशेषे । विधियुति =चतुर्मुखकर्ण =८ , सुकृत =पुण्य =९ , क्षौणिपाल — राजा = १६ । अतएव अङ्कस्य वामगत्या १६९८ शकाब्दाः (११८३ वङ्गाब्दा १७७६ खृष्टाब्दा वा ) उद्भवन्ति ।

(२८३) पाणिग्रह—विवाह , पक्षे पाणौ हस्ते धारणम् । कुम्भोद्भवा— दधकुम्भजाता , पक्षे अगस्त्यवेगुण्या ।

(१८४) येन विष्णुना रावणेत्यर्थ , अयो लौह लक्षणया तन्निर्मितमस्त्रमित्यर्थ , हत्वा रावण दाय खण्डित हत इत्यर्थ । दो धातो कर्मणि क्त।

स रामरूपी विष्णुर्वा युष्मान अव्यात् पायात्। रावण विशिनष्टि—करणोरण, करण कार्य्ये युद्धकर्मणीति यावत् उरण मेष इव तद्वत् विपक्षमपराभूय कथमपि रणान्न निवर्त्तते इति भाव । यद्वा करणे इन्द्रिये तदुपभोगे उरण इव पशुस्वभाव इति यावत परदारापहारकत्वादिति भाव । रणरण—रणे युद्धे रणति स्पर्द्धया सिंहनाद करोति यस्तादृश । राव—राति ददातीति कर्त्तरि अन, दातेत्यथ । अरण—न विद्यते रणो युद्ध यस्य तादृश रावणेन सह युद्धात् प्राक दिग्विजयित्वान्निवृत्तयुद्ध इत्यर्थ । अत्—अत्ति भक्षयति मानुषानिति शेष नरमांसभक्षक । अभी—भाडिणोर्भीर्भय यस्य स । अधुना राम विशिनष्टि । अव यस्येति पदमध्याहार्य्यम । यस्य रामस्य रामा पत्नी सीतेति यावत् रम अभि मार आत्मग्रहये वह्नि प्रविवश। सीता कीदृशीत्याह या सीता मार कन्दर्पं प्रत्यपि अरमा अनभिलाषा पतिव्रतेत्यर्थ । या च रमासारमा—रमाया लक्ष्म्या सार तेन माति परिमित करोति, स्वरूपतो लक्ष्मीरित्यर्थ । राम स्वय कीदृश ? श्रीमानदयोदय—श्री सम्पत् मानयित्तसमुन्नति दया परदु खापहरणेच्छा आसाम् उदयो यस्मात् स यमाराध्य सर्वे एश्वर्य्य सम्मान तदनुग्रहञ्च लभन्त इत्यर्थ । पुन कीदृग ? दयदय—दयै दाने दया यस्य स यो हि पालभ्य सदय ददाति न त्वसन्तोष मित्यर्थं । अपिच वेदय—वेदयतीति ज्ञापयन्न विद धातो सदनरूप मानवदह माश्रित्य स्वकर्म्मभि परेभ्यो ज्ञानप्रद इत्यर्थं । किञ्च जिष्णु—जयशील । पुन कीदृश अभीरभीरभीराभी—न भीरभी अभयमित्यर्थं अभिय राति ददातीति अभीरभीर सर्पं अभीरा वायुर्भुजगप्राणत्वात अभीराय वायवे भिय राति य भयप्रद अभीरभीरभरभीरो पवनाशनत्वात् तस्य भरो धारण तेन भिय राति य भयप्रद विष्णुरिति फलितार्थं गरुडवाहनत्वादस्येति। गरुड तस्मात् अभी अभय यस्य तादृश विष्णुरिति फलितार्थं गरुडवाहनत्वादस्येति। गरुड तस्मात् अभी अभय यस्य तादृश । अभीभी—न विद्यते भीर्भय देवेभ्य इति शेष यस्य स इन्द्रजित् त पुन कथम्भूत ? अभीभी—न विद्यते भीर्भय देवेभ्य इति शेष यस्य स इन्द्रजित् त श्यति छिनत्तीति अभीभी लक्ष्मण तम् अवति रक्षति अभीभी ।

(१८५) इद्धम्—अभिज्वलितम अइम्। कार्त्तिकदर्पणेय—१२ पद्धेन।

रुद्रेण—११ अङ्केन। ब्रह्मास्यप्रहत—४ अङ्केन गुणितम्। नक्षत्राधिपतिना यच्छेषित—चन्द्रेण २४ अङ्केन इत्यथ भक्त सत् यत् अवशिष्टम्। वेदाङ्गैश्च हत—६ अङ्केन गुणितम्। एवप्रकारेण १२० संख्या उद्भवति।

(२८६) इष्टम्—अभिलषितम् अङ्कम्। खाब्धेति—०००युक्तम्। खखयमेति—२०० राशिना व्यवकलितम्। खखेशेति—११०० अङ्केन युक्तम्। खाकाशेति—५०० राशिना भक्तम्। यच्छेषितम्—यत् शेषित भागावशिष्ट, तत् द्विगुणित, पुनश्च द्वग्हत २ अङ्केन गुणित, ४ अङ्केन गुणितमित्यर्थ। खाकाशाग्नीति—३०० अङ्केन युक्तम्। शशियुतम्—(पुनश्च) १ अङ्केन संयुक्तम्। एवप्रकारेण १९०१ खृष्टीयाब्दा उद्भवन्ति।

(२८७) इष्टम्—अभिलषितम् अङ्कम्। बाणगुणम्—५ द्वारा गुणितम्। सुखेन सहितम्—४ युक्तम्। खाङ्कहतम्—९० गुणितम्। तत् नष्टम्—तत् शरभूधरै ७५ द्वारा नष्ट भक्त तत्र यद् अवशिष्ट तत् दक्षेण २ द्वारा गुणितञ्च। सवत्सरम्—व्याप्य इत्यर्थ। अर्थात १२० वत्सर व्याप्य शिष्टा जना जीवन्तु।

अथवा इष्टम्—अभिलषितम्। नागहत—८ द्वारा गुणितम्। युत शशभृता—एकेन सह युक्तम्। निध्न शरधे शिवै—५५ द्वारा गुणितम्। व्योमयुगे नष्टं—४० द्वारा भक्तस्य यत् अवशिष्ट तत्। गजेन—८ द्वारा। अर्थात् १२० वत्सर व्याप्य शिष्टा जना जीवन्तु।

(२८८) स कश्चिद् गुणग्राही जनो रव कश्चिद् गुणवति जने रम ननन्द "जातौ जातौ यदुत्कृष्ट तद् रत्नमिति कथ्यते। स कीदृश ? न मोदन्ते प्रमोद न यान्तीत्यमुन्दि अक्षाणीन्द्रियाणि यस्य सोऽमुदक्षो जितेन्द्रिय। तथा बलदमनयद मत्कुपममनीतिदाता। तथा सेवायां परमगती मर्ग दक्षाङ्गमस्मात् उदक्षो निरत स्वाधीन इत्यर्थ। रवे कीदृशे ? वेदान्तापन्नो वेदापन्नस्तव अधीतवदे इत्यर्थ। तथा भक्ते प्रियवदे। तथा रचित कृतौ निगाया रजो रागद्वेषात्मिकाया बाधाया उच्छेदे उन्मूलने यत्नो येन तस्मिन् रचितनिगदगुच्छेदयत्ने। तथा न रमन्ते सुजनेषु धर्मे वा ये न अरमा दुर्जनास्तानीरयति दूरीकरोति यस्तस्मिन् अरमेरे दुर्जनदूरीकारके इत्यर्थ। तथा देवेषु आसक्तो देवासक्तस्तस्मिन् देवासक्ते देवपूजानिरते इत्यर्थ। तथा

तोदस्य व्यथाया दुर्गा दुर्गमा परानभिभूतास्तानप्यस्यन्ति क्षिपन्तीति तोदस्तांस्तेषां वासे निकेतने, शूराणामपि शूरा यमाश्रिता तस्मिन् इत्यर्थः। तथा दयन दान रथा वा तेन यो मदलवो गर्वकणिका तेन च बोद परिवेदना तेन मुक्ते रहिते प्रिय कृतापि अगस्थित इत्यर्थः। तथा वादेन सह वर्तते सवादस्तस्मिन् प्रमाणशास्त्रे इत्यर्थः। तथा अयन आगच्छन् अच्छो निर्मलता यस्मात् तस्मिन् अयदच्छे शुद्धिमति इत्यर्थः। तथा गुरुभि गुरुसेवाभिर्जनितो यथिर क्रम श्रमस्तनैव सह श्रान्त अथवा सन्ने आसते। तथा अपदान पदभ्रष्टान अवतीति अपदाव यद्वा अपगतो दाव उपतापो यस्मात् तस्मिन्निति।

(२८९) (क) क कर्णारिपिता ?—कर्णशवीरञ्जनस्य पिता 'वासव'। किमिच्छति जन ?— इरलम्। कि सौकृत विष्णुना ?— कुस्तलम् (वामनतम्)। को जानाति परिङ्गितम् ?— 'मतिमान्। विषमगु ( पञ्चवाण कन्दर्प ) कुवास्ति वा कामिनाम् ?— मनसि सीता कस्य वधू ?— 'रामस्य। प्रिय किमु हरे ?— कौस्तुभ' वक्षा कफ को कुत्याम् ?— अथइ। इति अष्टमत्युत्तरपदानां मध्यमाक्षरसयोगेन सरस्वति नमस्तुभ्यम् इति महामन्त्र प्राप्त। सौहित्यन—पर्याप्तभोजनेन।

(१९०) (क) सन्निमहोत्सवे—सन्निपूजाकाल। दस्रौ—अश्विनीकुमारौ। (ख) शीतगु—चन्द्र। आतपवरचना—कृतधारणम् (ग) भाद्रमासस्य शुक्लचतुर्थी कृष्णचतुर्थ्यांच तिथौ नष्टचन्द्रत्वात् चन्द्रदर्शन निषेध।

पञ्चाननगते भानौ पक्षयोरुभयोरपि।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्य कदाचन ॥

(घ) ब्राह्मणस्त्व—हे ब्राह्मण त्व स्य खण्डय ( सो+लोट्+हि )।

(१९१) खुकण्ठमापीड्य—रज्ज्वा इति शेष। इट निपत्य—एतादृश कृपस्य कूपपतनस्वभाव। उपनीय—गृहीत्वा। चचति—रचति। सतां—साधूनाम्।

(१९७) पवि—वज्रम्। यवसवत्—तृणवत्। दव—वनाग्नि। शिला शकलवत्—प्रस्तरखण्डवत्।

(१९८) तम स्तोम—अन्धकारसमूह। शलभ—पतङ्ग।

(३९९) प्रकृतिलघौ—प्रकृत्या स्वभावेन लघौ तर्के। गुर्वौ—पवित्रे। भासि-तरङ्ग—भासमान वङ्गियधूवक्ष सरत्वपकाण्डगुल्फ ( फातृनेति प्रसिद्ध )

(४०१) पण्डिते गौरस वाक्यरस। स्त्रीजने गौरसः चक्षूरस दृष्टिरसो वा, दर्शनमाधुर्यमिति यावत्। भोजने गौरस धेनुरस दुग्धमित्यर्थ।

"दिग्दृष्टिदीधितिस्वर्गवज्रवाग्वाणवारिषु।
भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृत॥ —हलायुध।

(४०९) पनस पुष्पमप्रदर्श्यैव फल प्रसूते तथोत्तमजनोऽपि वाचमकृत्वैव कार्यं करोति। अतस्तत्साद्दृश्यमुत्तमस्य। आम्र पुष्प फलञ्च प्रकटीकरोति, तथा मध्यमोऽपि जन प्रथम् वाक पर कार्यं इत्येव करोति। अतस्ततसाद्दृश्यम्। कुन्दस्तु केवल पुष्पमेव ददाति, तथा अधमोऽपि केवल वाक्परायण न तु कर्मतत्पर। अत कुन्दसाद्दृश्यमधमस्य। पुष्पफलमित्यत्र जातिरप्राणिनाम (पा—२। ४। ६) इति द्वन्द्वैकवद्भाव। वाक् कर्मेत्यत्र सर्व्वो हि द्वन्द्वो विभाषया एकवद्भवतीति न्यायाद् द्वन्द्वैकवद्भाव। वागपि इत्यत्र अपि शब्द अवधारणार्थ वागेव वाङ्मात्रमिति यावत् न तु कर्म्मेत्यभिप्राय।

(४१०) हेमकार—स्वर्णकार। सुवर्णगुणातिरक्त—सुन्दरवर्णगुणातिशय।

इति तृतीय-प्रवाह समाप्त।

---

# शेषोक्तिः ।

( १ )

जामाता यत्र विष्णुः स्वयमुपयमने कन्यका लोकमाता
विश्वामित्रश्च दूतो निखिलगुणनिधिर्योगकर्त्ता वशिष्ठः ।
राजर्षिः सम्प्रदाता नरवरजनकस्ते यज्ञा सुप्रसन्ना
देवं तन्नौमि यस्याकरुणविधिवशात् सौख्यलेशो न सत्र ॥

( २ ३ )

जनक तथाचन्द्रो मे जननी विन्ध्यवासिनी ।
पितामहो रामचन्द्र सार्थक प्रपितामह ॥
श्रीभाराम इति ख्यातो मद्वृद्धप्रपितामह ।
देवद्विजमहाभक्ता इमे मे पूर्व्वपुरुषा ॥

( ४ )

श्रीपूर्णचन्द्रकविभूषणकाव्यरत्नो
सौरे शुचौ व्यतनुतोऽङ्कसागराख्या ।
यस्य गुरोस्तुलसुङ्कसागराख्या
मैत्रे दिने ग्रहगुणेभशशाङ्कमाके ॥

( ५ )

संसारेऽस्मिन्नसारे कलिकलुषहरे भास्वरे सौधनीरे
सर्व्वस्थानैकसारे सकलसुखकरे जाह्नवीपुण्यतीरे ।
यस्या भूतानिपाली निवसति नितरां लिङ्गमाली कपाली
दुर्गाश्रीभालनारे मा मम भुजगमभूर्भद्रकाली सुखानि ॥

सम्पूर्णोऽयं ग्रन्थः ।

# কবিভূষণ শ্রীপূর্ণচন্দ্র দে কাব্যরত্ন উদ্ভটসাগর বি-এ

## প্রণীত, সংগৃহীত অনূদিত বা সম্পাদিত পুস্তকাবলী :—

১। সমগ্র বিশুদ্ধ ব্যাকরণ কৌমুদী (চারি ভাগ একত্র) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। (চতুর্থ সংস্করণ)। "আত্মনেপদ, পরস্মৈপদ" ও "লকারার্থ নির্ণয়ে পাণিনীয় বা বার্ত্তিক সূত্র এবং বাঙ্গালায় তাহার বিশদ ব্যাখ্যা দেওয়া হইয়াছে, অন্যান্য বিষয়ে অপাণিনীয় সূত্রগুলি কোন্ পাণিনীয় সূত্রের অন্তর্গত তাহাও ফুট নোটে লিখিত হইয়াছে। বিদ্যাসাগর মহাশয়ের সংস্করণে যে যে ভ্রম বা প্রমাদ ছিল তাহাও সংশোধিত হইয়া ফুট নোটে সন্নিবেশিত হইয়াছে। সূত্রার্গত উদাহরণ গুলির অর্থ এবং প্রত্যেক প্রকরণের নিম্নভাগে বহুসংখ্যক উৎকৃষ্ট প্রশ্ন ইংরাজী ভাষায় প্রদত্ত হইয়াছে পরিশিষ্টে লিঙ্গ নির্ণয়ের সুন্দর ব্যবস্থা করা হইয়াছে। এরূপ উৎকৃষ্ট ও সর্ব্বাঙ্গ-সুন্দর সংস্করণ এ পর্য্যন্ত বাহির হয় নাই গ্রন্থখানি ৬০০ পৃষ্ঠে সম্পূর্ণ হইয়াছে। মূল্য কাপড়ে বাঁধা ১||০ (দেড় টাকা)

২। বিশুদ্ধ ব্যাকরণ কৌমুদী (প্রথম ভাগ) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। অনেক অধিক শব্দের রূপ ও প্রত্যেক প্রকরণের শেষে বহুসংখ্যক প্রশ্ন সমন্বিত। পারিভাষিক শব্দের ইংরাজী প্রতিবাক্য ও দেওয়া হইয়াছে। মূল্য ||০ (আট আনা)।

৩। বিশুদ্ধ ব্যাকরণ কৌমুদী (দ্বিতীয় ও তৃতীয় ভাগ একত্র) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। ১৬ খানি প্রাচীন সংস্কৃত ব্যাকরণ ও টীকা অবলম্বন করিয়া ইহা সম্পাদিত হইয়াছে। মূল্য ১ (এক টাকা)।

৪। বিশুদ্ধ ব্যাকরণ কৌমুদী (চতুর্থ ভাগ) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। ইহা অতি সাবধানে সম্পাদিত। বিদ্যাসাগর মহাশয়ের সমস্ত মূল আছে। তবে যে যে ভ্রম ও প্রমাদ ছিল তাহা শোধন করিয়া দেওয়া গিয়াছে। ১৬ খানি প্রাচীন সংস্কৃত ব্যাকরণ ও টীকা অবলম্বন করিয়া লিখিত। বিভিন্ন ব্যাকরণের মতামত যথেষ্ট আছে। কয়েকটী কথা বক্তব্য—(১) সংস্কৃত সূত্র গুলির বিশদ ব্যাখ্যা এবং তাহাদের প্রমাণ স্বরূপ নানা উদাহরণ নানা মহাকাব্য হইতে গৃহীত। (২) স্ত্রী প্রত্যয়ের ৬৫ হইতে ৭০ সূত্র গুলি নূতন সন্নিবেশিত। (৩) বিদ্যাসাগর মহাশয়ের স্বরচিত সূত্র কি বা পাণিনি ও কাত্যায়ন হইতে গৃহীত সূত্র গুলি সংখ্যা সহ যথাযথ উল্লিখিত। (৪) প্রত্যেক প্রকরণের নিম্নভাগে প্রচুর পরিমাণ প্রশ্ন নিহিত। (৫) ফুট নোটে অনেক অবশ্য জ্ঞাতব্য কথা উল্লিখিত। অন্যান্য সংস্করণ অপেক্ষা ইহা তিন গুণ বড়। গ্রন্থখানি ৪||০

পৃষ্ঠে সম্পূর্ণ। এরূপ সর্ব্বাঙ্গ সুন্দর স স্করণ এ পর্য্যন্ত বাহির হয় নাই। হাই স্কুল ও কলেজের ছাত্রগণের সবিশেষ উপকারী। মূল্য ১৲ ( এক টাকা )।

৫ সচিত্রম্ ঋজুপাঠম্ ( প্রথমো ভাগ ) ( ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত ) বিদ্যাসাগর মহাশয়ের সমস্ত টিপ্পনী আছে। এতদ্ভিন্ন গ্রন্থকার ফুটনোটে প্রচুর পরিমাণে শব্দের অর্থ ব্যুৎপত্তি সমাস বাচ্যান্তর ও ইংরাজী অনুবাদ দিয়াছেন। ১২ খানি হাফটোন ছবি আছে। সুন্দর ছাপা ও বাঁধান মূল্য ৷৵ ( নয় আনা )

৬। সরল স স্কৃত পাঠ ( প্রথমে ভাগ ) প্রথম স স্কৃত পাঠার্থীদিগের জন্য। একটীও স যুক্ত বর্ণ নাই। মূল্য ( চারি আনা )

৭। সরল-স স্কৃত পাঠ প্রথমো ভাগ ) ইহার বিশুদ্ধ ব্যাখ্যা পুস্তক মূল্য ।৵ ( পাঁচ আনা )

৮। সরল স স্কৃত পাঠ ( দ্বিতীয়ো ভাগ ) ইহাতে স যুক্ত বর্ণ আছে ব্যাকরণ শিক্ষার বিশেষ উপযোগী মূল্য ॥ ( আট আনা )

৯। বিশুদ্ধ ও সচিত্র পদ্যপাঠ ( ১ম ভাগ ) ৺যদুগোপাল চট্টোপাধ্যায় প্রণীত। প্রচুর টীকা অর্থ ব্যুৎপত্তি ও প্রশ্ন সহিত মূল্য ( চারি আনা )।

১০। বিশুদ্ধ ও সচিত্র পদ্যপাঠ ( ২য় ভাগ )। ৺যদুগোপাল চট্টোপাধ্যায় প্রণীত। প্রচুর টীকা অর্থ ব্যুৎপত্তি ও প্রশ্ন সহিত মূল্য ৶ ( ছয় আনা )

১১ বিশুদ্ধ ও সচিত্র পদ্যপাঠ ( ৩য় ভাগ ) ৺যদুগোপাল চট্টোপাধ্যায় প্রণীত। ইহাতে সম্পূর্ণ টীকা অর্থ ব্যুৎপত্তি ও প্রশ্নাদি আছে মূল্য ॥ ( আট আনা )

১২। বিশুদ্ধ ও সচিত্র চারুপাঠ ( ১ম ভাগ ) ৺অক্ষয়কুমার দত্ত প্রণীত। প্রচুর টীকা অর্থ ব্যুৎপত্তি ও প্রশ্ন সহিত মূল্য ॥ ( আট আনা )

১৩। সচিত্র সানুবাদ ও বিশুদ্ধ চাণক্য শ্লোক এরূপ সর্ব্বাঙ্গ সুন্দর চাণক্য শ্লোক আর নাই। তিনখানি সুন্দর ছবি আছে প্রত্যেক খানি তিন রঙের তৃতীয় স স্করণ মূল্য । ( চারি আনা )

১৪। বিশুদ্ধ ধাতু রূপসাগর শ্রীপূর্ণচন্দ্র দে উদ্ভট সাগর বি এ প্রণীত ইহাতে প্রায় ৫ স স্কৃত ধাতুর লট, লোট ইত্যাদি ২১ প্রকার রূপ আছে। মূল্য ১৲ ( এক টাকা )।

এস্ সি আঢ্য এণ্ড কোম্পানী

৪৮ ও ১২ নং ওয়েলিংটন ষ্ট্রীট বৌবাজার কলিকাতা।

১৫। "উদ্ভট-সাগর:" (প্রথম দ্বিতীয় তৃতীয় প্রবাহ সমন্বিত: )। এই সংস্কৃত গ্রন্থখানি গত ১৯২৭ খৃষ্টাব্দ হইতে সংস্কৃত প্রথম, দ্বিতীয় ও উপাধি ত্রিবিধ পরীক্ষায় কাব্য ও ব্যাকরণে পাঠ্য হইয়াছে প্রত্যেক বৎসরেই ইহা হইতে প্রশ্ন পড়িতেছে, এবং আগামী পরীক্ষায়ও ইহা হইতে প্রশ্ন পড়িবে। প্রথম প্রবাহ প্রথম পরীক্ষার জন্য দ্বিতীয় প্রবাহ দ্বিতীয় পরীক্ষার জন্য, এবং তৃতীয়-প্রবাহ উপাধি-পরীক্ষার জন্য "কলিকাতা সংস্কৃত এসোসিয়েসন্"-কর্ত্তৃক নির্ব্বাচিত। তিনটী প্রবাহই একত্র বদ্ধ। তৃতীয়-সংস্করণ। মূল্য কাগজে বাঁধা ২্ দুই টাকা, কাপড়ে সোণার জলে বাঁধা ২॥০ (দুই টাকা আট আনা)।

১৬। "উদ্ভট-সমুদ্র" (দ্বিতীয় সংস্করণ) (বিক্রমাদিত্যের নবরত্নের এবং অন্যান্য কবি-গণের উৎকৃষ্ট উদ্ভট শ্লোক)। (প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ সহিত)। মূল্য কাপড়ে বাঁধা ২্ (দুই টাকা)।

১৭। "রস সাগর বর্ণিত কবি কৃষ্ণকান্ত ভাদুড়ী"। ইহাঁর জীবন চরিত এবং ৩০৪ (তিন শত চারি) অদ্ভুত বাঙ্গালা সমস্যা পূরণ কবিতা আছে। এরূপ অপূর্ব্ব গ্রন্থ এ পর্য্যন্ত বাহির হয় নাই। মূল্য ২্ (দুই টাকা)।

১৮। "স্তব সমুদ্র:" (প্রথম-প্রবাহ:)। ইহাতে নানা দেব দেবীর সংস্কৃত স্তব আছে। প্রত্যেক স্তবের প্রত্যেক শ্লোকের প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ প্রদত্ত। মূল্য কাপড়ে বাঁধা ২্ (দুই টাকা)।

১৯। "পাণ্ডব গীতা" (প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ সহিত)। মূল্য কাগজে বাঁধা ॥০ (আট আনা)।

২০। "প্রশ্নোত্তর মণিরত্নমালা" (শঙ্করাচার্য্য), "প্রশ্নোত্তর মালা" (জৈন যতি বিমল), "প্রশ্নোত্তর রত্নমালিকা" (কৃষ্ণানন্দ সরস্বতী)। (প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ সহিত)। মূল্য ।৵০ (ছয় আনা)।

গুরুদাস চট্টোপাধ্যায় এণ্ড সন্স্।
২০৩।১।১ নং কর্ণওয়ালিশ ষ্ট্রীট, কলিকাতা।

---

২১। বিশুদ্ধ "উপক্রমণিকা ব্যাকরণ" (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত) (দ্বিতীয় সংস্করণ)। অতি বিশুদ্ধ ভাবে ও সুন্দর রূপে মুদ্রিত। প্রত্যেক প্রকরণের শেষে অনেকগুলি করিয়া প্রশ্ন দেওয়া আছে। বিদ্যাসাগর মহাশয়ের মূল গ্রন্থে যতগুলি ধাতুর রূপ দেওয়া ছিল এই পুস্তকে প্রায় তাহার দ্বিগুণ ধাতুর রূপ দেওয়া হইয়াছে। পারিভাষিক শব্দ গুলির ইংরাজী প্রতিবাক্য এবং প্রত্যেক ধাতু রূপের নিম্ন ভাগে অনুবাদ ও সংশোধন বিষয়ক প্রশ্নও নিহিত আছে। গ্রন্থখানির আকার বৃহৎ। মূল্য ৸৹ (বার আনা।)

২২। সীতার বনবাস (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। ইহা অতি বিশুদ্ধ ও সর্ব্বাঙ্গ সুন্দর সংস্করণ। প্রত্যেক পৃষ্ঠের নিম্নভাগে দুরূহ শব্দের অর্থ ব্যাকরণ গত বিবৃতি এবং গ্রন্থের শেষে "ভৌগোলিক বিবরণ ও প্রায় সমস্তশুদ্ধ ৫০০ (পাঁচ শত সুন্দর প্রশ্ন নিহিত আছে ইহার মত উৎকৃষ্ট সংস্করণ অদ্যাবধি বাহির হয় নাই। মূল্য ৸৹ (বার আনা)।

২৩। শকুন্তলা" (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত। ইহা সীতার বনবাসের" প্রণালী অবলম্বন করিয়া লিখিত। মূল্য ॥৹ (আট আনা)।

মেসার্স্ ম্যাক্‌মিল্যান্ এণ্ড কোম্পানী লিমিটেড্।
২৯৪ নং বৌবাজার ষ্ট্রীট কলিকাতা।

---

২৪। "প্রবন্ধপাঠ" (৬ষ্ঠ সংস্করণ)। ইহা কলিকাতার এবং বর্দ্ধমান, ঢাকা ও চট্টগ্রাম ডিভিসনে ম্যাট্রিকিউলেসন স্কুল সমূহে সমাদৃত পাঠ্য পুস্তক। ইহার ভাষা অতি বিশুদ্ধ ও প্রাঞ্জল। মূল্য ॥৹ (আট আনা)।

২৫। মোহমুদ্গর ও "মোহ কুঠার" (শঙ্করাচার্য্য বিরচিত ও একত্র বদ্ধ) (দ্বিতীয় সংস্করণ)। প্রত্যেক সংস্কৃত মূল শ্লোক সুললিত ও প্রাঞ্জল বাঙ্গালা পদ্যানুবাদ সহিত। ইহাতে শঙ্করাচার্য্যের জীবন চরিত প্রদত্ত হইয়াছে। মূল্য কাগজে বাঁধা ।৹ (চারি আনা)।

শ্রীযোগেন্দ্রনাথ মুখোপাধ্যায়।
ন্যাশনাল সংস্কৃত প্রেস ডিপজিটরী,
৩০ নং কর্ণওয়ালিস্ ষ্ট্রীট, কলিকাতা।

---